॥ श्रीवरदराजाचार्यविरचिता ॥

# लघुसिद्धान्तकौमुदी

तिङन्ते

## रुधादयः तनादयः क्र्यादयश्च

लघुकौमुदी के ३५ संस्करणों पर आधारित रंगीन संस्करण

इस विषय के शोधपूर्ण सरलव्याख्यान पद्धति पर आधारित वीडियो हमारे चैनल पर उपलब्ध हैं।



संस्कृतसारः

छिद्यन्ते सर्वसंशयाः

**परामर्शकौ**

प्रो. ब्रजभूषणओझा

प्रो. नीलाभतिवारी

इन स्लाइड्स के माध्यम से पढ़ने के लिए अथवा इनकी व्याख्या देखने के लिए हमारे चैनल का अनुसरण करें।



YouTube संस्कृतसारः @sanskrit sar

**प्रस्तोता**

डॉ. श्रीओमशर्मा (व्याकरणविद्याशाखा)

केन्द्रीयसंस्कृतविश्वविद्यालयः, श्रीरघुनाथकीर्तिपरिसरः देवप्रयागः (उत्तराखण्डः)

# निवेदनम्

यह पठन-पाठनसामग्री 'संस्कृतव्याकरण' में शीघ्र प्रवेशेच्छुक-छात्राध्यापकों के हेतु 'संस्कृतसारः' इस समाजसेवी संस्था द्वारा संस्कृतभाषा की सेवार्थ प्रस्तुत की जा रही है। अतः आपसे निवेदन है कि इन 'लघुसिद्धान्तकौमुदी' स्लाइड्स् व वीडियोज् का अपने पठन-पाठन में पर्याप्त उपयोग कर संस्कृत की सेवा में हमारा सहयोग करें। इन स्लाइड्स् को शुद्धतम बनाने का प्रयास करने पर भी ऐसा सम्भव है कि इसमें कहीं त्रुटि रह गयी हों अतः उनके सुधार के लिए हमें ईमेल द्वारा सूचित करें।



दिनाङ्कः-

22.04.2022

अस्माकं सम्पर्कसूत्राणि—
e-mail अणुवाक्— samskritsaarah@gmail.com
YOUTUBE — संस्कृतसारः @sanskrit sar
FACEBOOK— @sanskrit_shiksha संस्कृतशिक्षा

निवेदकः-

संस्कृतशिक्षा-परिवारः

# रुधादिगणे धातवः



## अथोभयपदिनः

1. रुधिँर् आवरणे
2. भिदिँर् विदारणे
3. छिदिँर् द्वैधीकरणे
4. युजिँर् योगे
5. रिचिँर् विरेचने
6. विचिँर् पृथग्भावे
7. क्षुदिँर् संपेषणे
8. उँच्छृदिँर् दीप्तिदेवनयोः
9. उँतृदिँर् हिंसानादरयोः

## अथ परस्मैपदिनः

1. कृतीँ वेष्टने
2.3. तृहँ हिसिँ हिंसायाम्
4. उन्दीँ क्लेदने
5. अञ्जूँ व्यक्ति-म्रक्षण-कान्ति-गतिषु
6. तञ्चूँ सकोचने
7. ओँविजीँ भयचलनयोः
8. शिषॢँ विशेषणे
9. पिषॢँ संचूर्णने
10. भञ्जोँ आमर्दने
11. भुजँ पालनाभ्यवहारयोः

## अथात्मनेपदिनः

1. ञिइन्धीँ दीप्तौ
2. विदँ विचारणे

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु 'रुध्' धातोः प्रक्रिया



रुध्+ लँट्/तिप्
रु न ध्+ ति
रु न ध्+ धि (झषस्तथो.. )
रु न द्+ धि (जश्त्वम्)
रुणद्धि

रु न ध्+ तस्
रु न् ध्+ तस् (श्नसोरल्लोपः)
रु न् ध्+ धस्
रु न् द्+ धस्
रुं द्+ धस्
रु न् द्+ धस् (झरो झरि सवर्णे)
रुन्धः, रुन्द्धः

## ❑ रुधिँर् आवरणे।

❖ श्नम्-विधायकं विधिसूत्रम्—

सूत्रम्— रुधादिभ्यः श्नम् (३,१.७८)

अर्थः— शपोऽपवादः। रुणद्धि। श्नसोरल्लोपः, अनुस्वारपरसवर्णौ। रुन्धः। रुन्धन्ति। रुणत्सि। रुन्धः। रुन्ध। रुणध्मि। रुन्ध्वः। रुन्ध्मः। रुन्धे। रुन्धाते। रुन्धते। रुन्त्से। रुन्धाथे। रुन्ध्वे। रुन्धे। रुन्ध्वहे। रुन्ध्महे।
रुरोध, रुरुधे। रोद्धासि, रोद्धासे। रोत्स्यसि, रोत्स्यसे। रोत्स्यति, रोत्स्यते। रुणद्धु, रुन्धात्। रुन्धाम्। रुन्धन्तु। रुन्धि। रुणधानि। रुणधाव। रुणधाम। रुन्धाम्। रुन्धाताम्। रुन्धताम्। रुन्त्स्व। रुणधै। रुणधावहै। रुणधामहै।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु 'रुध्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते रुधादयः)

अरुनध्+ त्
अरुनध् (हल्ङ्याभ्यो..)
अरुणद् (जश्त्वं वा चर्त्वे)
अरुणत्, अरुणद्

अरुनध्+ स्
अरुनद्
अरुणर् (दश्च)
अरुणः, अरुणत्, अरुणद्

अरुणत्, अरुणद्। अरुन्धताम्। अरुन्धन्।
अरुणः, अरुणत्, अरुणद्। अरुन्ध।
अरुन्धाताम्। अरुन्धत। अरुन्धाः।
रुन्ध्यात्। रुन्धीत। रुध्यात्, रुत्सीष्ट।
अरुधत्, अरौत्सीत्। अरुद्ध। अरुत्साताम्।
अरुत्सत। अरोत्स्यत्, अरौत्सीत्। अरुद्ध।
अरुत्साताम्। अरुत्सत।
अरोत्स्यत्, अरोत्स्यत॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु 'भिदादि' अष्टधातूनां प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते रुधादयः)

रिच्+ लँट्/तिप्
रि न च्+ ति
रि ण क्+ ति (चो कुः)
रिणक्ति

रिच्+ लँट्/त
रि न च्+ त
रिन् क्+ ति (श्नसोरल्लोपः)
रिङ्क्ते (अनुस्वार-परसवर्णौ)

रिच् स्य+ ति
रेक् स्य+ ति
रेक् ष्य+ ति
रेक्ष्यति

छर्द् छर्द्+ अ
च छर्द्+ अ
च त् छर्द्+ अ
चच्छर्द

- भिदिँर् विदारणे॥ २॥
- छिदिँर् द्वैधीकरणे॥ ३॥
- युजिँर् योगे॥ ४॥
- रिचिँर् विरेचने= निःसारणम्॥ ५॥ रिणक्ति, रिङ्क्ते। रिरेच। रेक्ता। रेक्ष्यति। अरिणक्। अरिचत्, अरैक्षीत्, अरिक्त॥
- विचिँर् पृथग्भावे॥ ६॥ विनक्ति, विङ्क्ते॥
- क्षुदिँर् संपेषणे= चूर्णीकरणे॥ ७॥ क्षुणत्ति, क्षुन्ते। क्षोत्ता॥ अक्षुदत्, अक्षौत्सीत्, अक्षुत्त।
- उँच्छृदिँर् दीप्तिदेवनयोः॥ ८॥ छृणत्ति छृन्ते। चच्छर्द। 'सेऽसिची'ति वेट्। चच्छृदिषे, चच्छृत्से। छर्दिता। छर्दिष्यति, छर्त्स्यति। अच्छृदत्, अच्छर्दीत्, अच्छर्दिष्ट॥
- उँतृदिँर् हिंसानादरयोः॥ ९॥ तृणत्ति, तृन्ते॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु ‘कृत्’ धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते रुधादयः)

कृत्+ तिप्। कृ न त्+ ति। कृ ण त्+ ति= कृणत्ति

❑ कृतीँ वेष्टने॥ १०॥ कृणत्ति॥

लँट्— कृणत्ति कृन्तः / कृन्तः कृन्तन्ति। कृणत्सि कृन्थः / कृन्त्थः कृन्थ / कृन्त्थ। कृणत्मि कृन्त्वः कृन्त्मः।

लिँट्— चकर्त चकृततुः चकृतुः। चकर्तिथ चकृतथुः चकृत। चकर्त चकृतिव चकृतिम।

लुँट्— कर्तिता कर्तितारौ कर्तितारः। कर्तितासि कर्तितास्थः कर्तितास्थ। कर्तितास्मि कर्तितास्वः कर्तितास्मः।

लृँट्— कर्तिष्यति कर्तिष्यतः कर्तिष्यन्ति। कर्तिष्यसि कर्तिष्यथः कर्तिष्यथ। कर्तिष्यामि कर्तिष्यावः कर्तिष्यामः।

लृँट्— कर्त्स्यति कर्त्स्यतः कर्त्स्यन्ति। कर्त्स्यसि कर्त्स्यथः कर्त्स्यथ। कर्त्स्यामि कर्त्स्यावः कर्त्स्यामः

लोँट्— कृणत्तु, कृन्तात् कृन्ताम् कृन्तन्तु। कृन्धि, कृन्तात् कृन्तम् कृन्त। कृणतानि कृणताव कृणताम।

लँङ्— अकृणत् / अकृणद् अकृन्ताम् / अकृन्ताम् अकृन्तन्। अकृणः / अकृणत् / अकृणद् अकृन्तम् / अकृन्तम् अकृन्त / अकृन्त। अकृणतम् अकृन्त्व अकृन्त्म।

वि.लिँङ्— कृन्त्यात् कृन्त्याताम् कृन्त्युः। कृन्त्याः कृन्त्यातम् कृन्त्यात। कृन्त्याम् कृन्त्याव कृन्त्याम।

आ.लिँङ्— कृत्यात् कृत्यास्ताम् कृत्यासुः। कृत्याः कृत्यास्तम् कृत्यास्त। कृत्यासम् कृत्यास्व कृत्यास्म।

लुँङ्— अकर्तीत् अकर्तिष्टाम् अकर्तिषुः। अकर्तीः अकर्तिष्टम् अकर्तिष्ट। अकर्तिषम् अकर्तिष्व अकर्तिष्म।

लृँङ्— अकर्तिष्यत् अकर्तिष्यताम् अकर्तिष्यन्। अकर्तिष्यः अकर्तिष्यतम् अकर्तिष्यत। अकर्तिष्यम् अकर्तिष्याव अकर्तिष्याम।

लृँङ्— अकर्त्स्यत् अकर्त्स्यताम् अकर्त्स्यन्। अकर्त्स्यः अकर्त्स्यतम् अकर्त्स्यत। अकर्त्स्यम् अकर्त्स्याव अकर्त्स्याम।

# परस्मैपदिधातुषु ‘तृह्’ धातोः प्रक्रिया



तृह्+ ति
तृनह्+ ति
तृन इम् ह्+ ति
तृण इढ्+ ति (ढत्वम्)
तृणेढ्+ धि (धत्वम्)
तृणेढ्+ ढि (ष्टुत्वम्)
तृणेढ्+ ढि (ढलोपः)
**तृणेढि**

तृनह्+ तस्
तृन् ह्+ तस् (अल्लोपः)
तृन् ढ्+ तस् (ढत्वम्)
तृन् ढ्+ धस् (धत्वम्)
तृन् ढ्+ ढस् (ष्टुत्वम्)
तृन् + ढस्(ढलोपः)
तृं + ढस् (अनुस्वारः)
तृण् + ढस् (परसवर्णः)
**तृण्ढः**

❑ तृहँ हिसिँ हिंसायाम्॥ ११-१२॥

❖ इमागम-विधायकं विधिसूत्रम्—

**सूत्रम्—** तृणह इम् (७,३.९२)

**अर्थः—** तृहः श्नमि कृते इमागमो हलादौ पिति सार्वधातुके। तृणेढि। तृण्ढः। ततर्ह। तर्हिता। अतृणेट्॥

अतृनह्+ त् (लङ्)
अतृन इम् ह्+ त्
अतृणेढ्+ (ढत्वम्)
अतृणेड् + (डत्वम्)
अतृणेट्+ (वावसाने)
**अतृणेट् अतृणेड्**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु 'हिंस्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते रुधादयः)

हिस्+ ति
हि नुँम् स्+ ति
हि न् स्+ ति
हि श्नम् न् स्+ ति
हिन न् स्+ ति
हिन स्+ ति
हिनस्ति

हिस्+ ति
हि नुँम् स्+ अ
हि न् स्+ अ
हिंस्+ अ
हिंस् हिंस्+ अ
हि हिंस्+ अ
जिहिंस

अहिन न् स्+ त्
अहिनस्+
अहिनद्+
अहिनत्, अहिनद्

अहिनस्+ स्
अहिनर्+
अहिनः

अहिनस्+ स्
अहिनद्+
अहिनत्,
अहिनद्

❑ तृहँ हिसिँ हिंसायाम्॥ ११-१२॥

❖ नकारलोप-विधायकं विधिसूत्रम्—

सूत्रम्— श्नान्नलोपः (६,४.२३)

अर्थः— श्नमः परस्य नस्य लोपः स्यात्। हिनस्ति। जिहिंस। हिंसिता॥

❖ दत्व-विधायकं विधिसूत्रम्—

सूत्रम्— तिप्यनस्तेः (८,२.७३)

अर्थः— पदान्तस्य सस्य दः स्यात्तिपि न त्वस्तेः। 'ससजुषोरुँ'रित्यस्यापवादः। अहिनत्, अहिनद्। अहिंस्ताम्। अहिंसन्॥

❖ वैकल्पिकरुँत्व-विधायकं विधिसूत्रम्—

सूत्रम्— सिपि धातो रुँर्वा (८,२.७४)

अर्थः— पदान्तस्य धातोः सस्य रुँः स्याद्वा, पक्षे दः। अहिनः, अहिनत्, अहिनद्॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु 'उन्द्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते रुधादयः)

❑ उन्दीँ क्लेदने= आर्द्रीकरणे॥ १३॥ उनत्ति। उन्तः। उन्दन्ति। उन्दाञ्चकार। औनत्, औनद्। औन्ताम्। औन्दन्। औनः, औनत्-औनद्। औनदम्॥

उन्द्+ ति
उनन्द् + ति (श्नान्नलोपः)
उनत्+ ति= उनत्ति

लँट्— उनत्ति उन्तः-उन्तः उन्दन्ति । उनत्सि उन्त्थः उन्त्थ। उनद्मि उन्द्वः उन्द्मः।

लिँट्— उन्दाञ्चकार उन्दाञ्चक्रतुः उन्दाञ्चक्रुः । उन्दाञ्चकर्थ उन्दाञ्चक्रथुः उन्दाञ्चक्र । उन्दाञ्चकार उन्दाञ्चकृव उन्दाञ्चकृम । उन्दाम्बभूवेत्यादयः।

लुँट्— उन्दिता उन्दितारौ उन्दितारः। उन्दितासि उन्दितास्थः उन्दितास्थ। उन्दितास्मि उन्दितास्वः उन्दितास्मः।

लृँट्— उन्दिष्यति उन्दिष्यतः उन्दिष्यन्ति। उन्दिष्यसि उन्दिष्यथः उन्दिष्यथ। उन्दिष्यामि उन्दिष्यावः उन्दिष्यामः।

लोँट्— उनत्तु -उन्तात् उन्ताम् उन्दन्तु। उन्धि ,उन्द्धि -उन्तात् उन्तम् उन्त। उनदानि उनदाव उनदाम।

लँङ्— औनत् -औनद् औन्ताम् औन्दन्। औनः औनत् औनद्, औन्तम् औन्त। औनदम् औद्व औद्म।

विं.लिँङ्— उन्द्यात् उन्द्याताम् उन्द्युः। उन्द्याः उन्द्यातम् उन्द्यात। उन्द्याम् उन्द्याव उन्द्याम।

आ.लिँङ्— उद्यात् उद्यास्ताम् उद्यासुः । उद्याः उद्यास्तम् उद्यास्त। उद्यासम् उद्यास्व उद्यास्म।

लुँङ्— औन्दीत् औन्दिष्टाम् औन्दिषुः। औन्दीः औन्दिष्टम् औन्दिष्ट। औन्दिषम् औन्दिष्व औन्दिष्म।

लृँङ्— औन्दिष्यत् औन्दिष्यताम् औन्दिष्यन्। औन्दिष्यः औन्दिष्यतम् औन्दिष्यत। औन्दिष्यम् औन्दिष्याव औन्दिष्याम।

आ उनन्द्+ सि (श्नान्नलोपः)
औनद्+(दश्च- वा रुत्वम्)
औनर् = औनः

# परस्मैपदिधातुषु 'अञ्ज्, तञ्च्' धातोः प्रक्रिया



अञ्ज्+ ति
अनञ्ज् + ति
अनज्+ ति (श्नान्नलोपः)
अनग्+ ति (चोः कुः)
अनक्+ ति (खरि च)
अनक्ति

अनञ्ज् + तस्
अनज्+ तस् (श्नान्नलोपः)
अन्ज्+ तस् (श्नसोरल्लोपः)
अन् ग्+ तस् (चोः कुः)
अन् क्+ तस् (खरि च)
अङ्क्तः (अनुस्वारपरसवर्णौ)

अञ्ज् अञ्ज् + अ
अ अञ्ज् + अ
आ अञ्ज् + अ (अत आदेः)
आ न् अञ्ज् + अ (तस्मान्नुँड्..)
आनञ्ज

अनञ्ज् + सि
अनज् + हि
अन् ज् + धि
अन् ग् + धि
अं ग् + धि= अङ्ग्धि

❑ अञ्जूँ व्यक्ति=विवेचनम्, म्रक्षण[1]=स्निग्धता कान्तिगतिषु॥ १४॥ अनक्ति। अङ्क्तः। अञ्जन्ति। आनञ्ज। आनञ्जिथ, आनङ्क्थ। अञ्जिता, अङ्क्ता। अङ्ग्धि। अनजानि। आनक्॥

❖ नित्य-इडागम-विधायकं विधिसूत्रम्—

➢ **सूत्रम्—** अञ्जेः सिँचि (७,२.७१)

➢ **अर्थः—** अञ्जेः सिँचो नित्यमिट् स्यात्। आञ्जीत्॥

❑ तञ्चूँ सङ्कोचने[2]= प्रसृतस्य वस्तुनोऽल्पदेशकरणम्॥ १५॥ तनक्ति। तञ्चिता, तङ्क्ता।

१.चेन्नै संस्करणे 'श्लक्ष्ण' इति पाठः।
२. चेन्नै संस्करणे 'संशोचने' इति पाठः।

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु 'विज्, शिष्,पिष्' धातूनां प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते रुधादयः)

विनज्+ ति
विनग्+ ति (चोः कुः)
विनक्+ ति (खरि च)
विनक्ति

विनज्+ तस् (श्नान्नलोपः)
विन्ज्+ तस् (श्नसोरल्लोपः)
विन् ग्+ तस् (चोः कुः)
विन् क्+ तस् (खरि च)
विङ्क्तः (अनुस्वारपरसवर्णो)

- ❑ ओँविजीँ भयचलनयोः ॥ १६ ॥ विनक्ति॥ विङ्क्तः। 'विज इडि'ति ङित्त्वम्। विविजिथ। विजिता। अविनक्। अविजीत्॥
- ❑ शिषॢँ विशेषणे ॥ १७ ॥ शिनष्टि। शिंष्टः। शिंषन्ति। शिनक्षि। शिशेष। शिशेषिथ। शेष्टा। शेक्ष्यति। हेर्धिः[1]। शिण्ड्ढि। शिनषाणि। अशिनट्। शिंष्यात्। शिष्यात्। अशिषत्॥
- ❑ एवं पिषॢँ संचूर्णने ॥ १८ ॥

शिष्+ ति
शिनष्+ ति
शिनष्+ टि
शिनष्टि

शिनष्+ सि
शिनक्+ षि
शिनक्षि

लोँट्

शिष्+ सि
शिन् ष्+ हि (हित्वम्, अल्लोपः)
शिन् ष्+ धि (धित्वम्)
शिन् ष्+ ढि (ष्टुत्वम्)
शिं ष्+ ढि (अनुस्वारः)
शिं ड्+ ढि (जश्त्वम्)
शिण् ड्+ ढि (परसवर्णः)=2.शिण्ड्ढि
शिण्+ ढि (झरो झरि सवर्णे)=1.शिण्ढि

धित्वे ष्टुत्वेऽप्यनुस्वारे जश्त्वे परसवर्णता।
सवर्णे च झरो लोपे शिण्ढि-पिण्ढीति जायते॥

[1].चेन्नै संस्करणे 'ड-ढ-डलोपानुस्वार-परसवर्णा' इति अधिकः पाठः।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु ‘भञ्ज्-भुज्’ धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते रुधादयः)

भञ्ज्+ ति
भनञ्ज् + ति
भनज्+ ति(श्नान्नलोपः)
भनग्+ ति (चोः कुः)
भनक्+ ति (खरि च)
भनक्ति

भञ्ज् भञ्ज् + थ
भञ्ज् भञ्ज् + इ थ
बभञ्ज् + इथ= बभञ्जिथ
बभन् ग् + थ
बभं ग् + थ
बभङ् क् + थ
बभङ्क्थ

भञ्ज् तास् + आ
भन् ग् त्+ आ
भन् क् + ता
भङ्क्ता

भुज् स्य + ति
भुग् स्य + ति
भुक् स्य + ति
भोक् ष्य + ति
भोक्ष्यति

- भञ्जोँ आमर्दने= त्रोटने ॥ १९ ॥
- ‘श्नान्नलोपः’। भनक्ति। बभञ्जिथ, बभङ्क्थ। भङ्क्ता। भङ्ग्धि। अभाङ्क्षीत्॥
- भुजँ पालनाभ्यवहारयोः॥ २०॥

पालनम्= रक्षणम्, अभ्यवहारः= भक्षणम्

भुनक्ति। भोक्ता। भोक्ष्यति। अभुनक्। अभौक्षीत्[1] ॥

१.चेन्नै संस्करणे अधिकः पाठः दृश्यते।

# भक्षणाद्यर्थेषु 'भुज्' धातोः आत्मनेपदविधानम्



भुज्+ त
भुन् ज्+ त (श्नसोरल्लोपः)
भुन् ग्+ ते (चोः कुः)
भुन् क्+ ते (खरि च)
भुं क्+ ते (अनुस्वारः)
भुङ् क्+ ते (परसवर्णः)
भुङ्क्ते

❖ आत्मनेपद-विधायकं विधिसूत्रम्—

➢ सूत्रम्— भुजोऽनवने (१,३.६६)

➢ अर्थः— अवनम्= रक्षणम्, तद्भिन्नेऽर्थे तङानौ स्तः।
ओदनं भुङ्क्ते।
अनवने किम्? महीं भुनक्ति॥

भुज्+ आताम्
भुन् ज्+ आते (श्नसोरल्लोपः)
भुं ज्+ आते (अनुस्वारः)
भुञ् ज्+ आते(परसवर्णः)
भुञ्जाते

भुज्+ झ
भुज्+ अत (आत्मनेपदेष्वनतः)
भुन् ज्+ अते (श्नसोरल्लोपः)
भुं ज्+ अते (अनुस्वारः)
भुञ् ज्+ अते(परसवर्णः)
भुञ्जते

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आत्मनेपदिधातुषु 'इन्ध्-विद्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते रुधादयः)

इन्ध्+ त
इनन्ध् + त
इनध्+ त(श्नान्नलोपः)
इन्ध्+त (श्नसोरल्लोपः)
इन्ध्+ ध (झषस्तथो..)
इन्द्+ धे (जश्त्वम्)
इन्+ धे (झरो झरि सवर्णे)
इन्धे, इन्द्धे

इन्ध्+ आते
इनन्ध् + आतो
इनध्+ आते (श्नान्नलोपः)
इन्ध्+ आते (श्नसोरल्लोपः)
इन्धाते

इन्ध्+ झ
इनन्ध् + अत
इनध्+ अत (श्नान्नलोपः)
इन्ध्+ अते (श्नसोरल्लोपः)
इन्धते

❑ञिइन्धीँ दीप्तौ॥ २१॥ इन्धे, इन्द्धे। इन्धाते। इन्धते। इन्त्से। इन्ध्वे। इन्धाञ्चक्रे। इन्धिता।[१] इन्धाताम्। इनधै। ऐन्ध। ऐन्धताम्। ऐन्धाः।

❑विदँ विचारणे॥ २२॥ विन्ते। वेत्ता॥

॥ इति रुधादयः॥ ७॥

विद्+ त
विनद् + त
विन् द् + त (श्नसोरल्लोपः)
विन् द् + त (खरि च)
विन्ते

१.चेन्नै संस्करणे अधिकः पाठः दृश्यते।

# रुधादिगणस्य परीक्षणम्

**१.लघुसिद्धान्तकौमुद्यां रुधादिगणे कति धातवः पठिताः?**

क. विंशतिः

**ख. द्वाविंशतिः**

ग. ऊनविंशतिः

घ. त्रयोविंशतिः

**२. 'रुनध्+ तस्' अस्यां स्थितौ कस्य रूपस्य सिद्धिः?**

क. रुन्धः

ख. रुनद्धः

ग. रुणद्धः

**घ. रुन्धः, रुन्द्धः**

**३.रुध्-धातोः परस्मैपदे लोँट्युत्तमपुरुषैकवचने किं रूपम्?**

क. रुणानि

**ख. रुणधानि**

ग. रुधानि

घ. रुनधानि

**४. रुध्-धातोः परस्मैपदे लँङि मध्यमपुरुषैकवचने किं रूपम्?**

क. अरुणः

ख. अरुणत्

ग. अरुणद्

**घ. उपर्युक्तानि सर्वाणि।**

**५. रुध्-धातुविषये इदं कथनं समीचीनं नास्ति—**

क. अयं धातूभयपदी।

ख. लुँङि प्रथमपुरुषैकवचने 'अरुधत्,अरौत्सीत्,अरुद्धः'इति रूपाणि भवन्ति।

**ग. अयं धातुः सेट्।**

घ. वि-उपसर्गपूर्वः 'विरोध' अस्य धातोः रूपम्।

**६. भिद्-धातोः लोँटि मध्यमपुरुषैकवचने किं रूपम्?**

क. भिन्धि

ख. भिन्द्धि

ग. भिन्तात्-भिन्त्तात्

**घ. उपर्युक्तानि सर्वाणि।**

**७. चिच्छेद, अच्छिनः, अच्छित्त, छिनदै— एतानि रूपाणि क्रमशः सन्ति।**

क. लिँट्-लोँट्-लुँङ्-लँङ्लकाराणाम्।

ख. लिँट्-लँङ्-लुँङ्-लँङ्लकाराणाम्।

**ग. लिँट्-लँङ्-लुँङ्-लोँट्लकाराणाम्।**

घ. लिँट्-लुँङ्-लृँङ्-लोँट्लकाराणाम्।

**८. 'युनक्ति' इति रूपं वर्त्तते—**

**क. युज्-धातोः लँटि एकवचने।**

ख. युज्-धातोः विधिलिङि एकवचने।

ग. युज्-धातोः आशीर्लिँङि एकवचने।

घ. युज्-धातोः लोँटि एकवचने।

**९. 'अरिक्त' इति रूपं वर्त्तते—**

क. लँङि प्रथमैकवचने

**ख. लुँङि प्रथमैकवचने**

ग. लँङि मध्यमैकवचने

घ. लुँङि मध्यमैकवचने

**१०. 'क्षुदिँर्' इति धातुः कस्मिन्नर्थे?**

क. क्षरणे

ख. बुभुक्षायाम्

ग. पृथग्भावे

**घ. सम्पेषणे**

**११. छृद्-धातोः लिँटि मध्यमपुरुषैकवचने किं रूपम्?**

**क. चच्छृदिषे- चच्छृत्से**

ख. चच्छृदिषे- चच्छृद्से

ग. चच्छृदिसे- चछृत्से

घ. सर्वाणि

**१२. एतेषु कः धातुः हिंसानादरयोः?**

क. छृद्

ख. क्षुद्

**ग. तृद्**

घ. रिच्

**१३. कृत्-धातोः वैकल्पिक-इडागमः कुत्र भवति?**

क. लृँटि

ख. लुँङि

ग. लृँटि, लुँङि

**घ. लृँटि लृँङि**

**१४. 'तृणेढि' इति रूपं कस्य धातोः?**

क. तृण्-धातोः

**ख. तृह्-धातोः**

ग. तृह्-हिंस्-धातोः

घ. तृढ्

**१५. 'तृणह इम्' इत्यस्य समीचीनार्थः कः?**

क. तृहः श्नमि कृते इमागमो पिति सार्वधातुके।

ख. तृहः श्नमि कृते इडागमो हलादौ पिति सार्वधातुके।

ग. तृहः श्नमि कृते इमागमो हलादौ पिति आर्धधातुके।

**घ. तृहः श्नमि कृते इमागमो हलादौ पिति सार्वधातुके।**

**१६. 'अतृणेट्-ड्' इत्यस्य समीचीनां प्रक्रियां चिनुत—**

क. **तृह्+लँङ्— इत्यत्र तिपि श्नमि अनुबन्धलोपे हल्ङ्यादिलोपे इमागमे ढत्वे जश्त्वे णत्वे वैकल्पिकचर्त्वे अडागमे च कृते रूपसिद्धिः।**

ख. तृह्+लँङ्— इत्यत्र तिपि अनुबन्धलोपे हल्ङ्यादिलोपे इमागमे ढत्वे जश्त्वे णत्वे वैकल्पिकचर्त्वे अडागमे च कृते रूपसिद्धिः।

ग. तृह्+लँङ्— इत्यत्र तिपि श्नमि अनुबन्धलोपे हल्ङ्यादिलोपे इमागमे ढत्वे जश्त्वे णत्वे वैकल्पिकचर्त्वे च कृते रूपसिद्धिः।

घ. तृह्+लँङ्— इत्यत्र तिपि श्नमि अनुबन्धलोपे हल्ङ्यादिलोपे ढत्वे जश्त्वे णत्वे वैकल्पिकचर्त्वे अडागमे च कृते रूपसिद्धिः।

**१७. 'तिप्यनस्तेः' इति सूत्रेण किं भवति?**

क. लोपः

ख. अङ्

ग. चर्त्वम्

**घ. दत्वम्**

**१८. एतेषु हिंस्-धातोः इदं रूपं न कुत्रापि भवति?**

क. हिंसन्ति

ख. हिन्धि

ग. हिनसानि

**घ. हिस्यात्**

**१९. हिंस्-धातोः सिपि कति रूपाणि भवन्ति?**

**क. ३**

ख. २

ग. १

घ. ४

**२०. एतेषु ईदित्-धातुं चिनुत—**

क. हिंस्

ख. शिष्

ग. पिष्

**घ. विज्**

**२१. 'प्रक्षणम्' इत्यस्य कोऽर्थः ?**

क. विवेचनम्

ख. हिंसनम्

**ग. स्निग्धता**

घ. सङ्कोचनम्

**२२. 'शिण्ढि शिण्ड्ढि' इत्यस्य समीचीना प्रक्रिया का ?**

क. हित्वम्, अल्लोपः, जश्त्वम्,धित्वम्,ष्टुत्वम्,अनुस्वारः, परसवर्णः, झरो झरि सवर्णे।

ख. हित्वम्, अल्लोपः, ष्टुत्वम्,अनुस्वारः,जश्त्वम्, धित्वम्,परसवर्णः, झरो झरि सवर्णे।

ग. हित्वम्, अल्लोपः,धित्वम्,ष्टुत्वम्,अनुस्वारः, परसवर्णः, जश्त्वम्, झरो झरि सवर्णे।

**घ. हित्वम्, अल्लोपः,धित्वम्,ष्टुत्वम्,अनुस्वारः,जश्त्वम्,परसवर्णः, झरो झरि सवर्णे।**

**२३. 'आमर्दने' अर्थे एतेषु को धातुः प्रयुज्यते?**

क. भिज्

ख. भिद्

ग. अञ्ज्

**घ. भञ्ज्**

**२४. भुज्-धातोरिदं रूपं भक्षणार्थे नास्ति—**

**क. भुनक्ति**

ख. भुङ्क्ते

ग. भुज्यात्

घ. अभुनक्

**२५. विद्-धातोः लँटि प्रथमैकवचने कति रूपाणि—**

क. १

ख. २

ग. ३

घ. ४

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# तनादिगणे धातवः

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते तनादयः)

## अथोभयपदिनः

1. तनुँ विस्तारे ॥
2. षणुँ दाने ॥
3. क्षणुँ हिंसायाम् ॥
4. क्षिणुँ च ॥
5. तृणुँ अदने ॥
6. डुकृञ् करणे ॥

## अथ परस्मैपदिनः



## अथात्मनेपदिनः

1. वनुँ याचने ॥
2. मनुँ अवबोधने ॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु 'तन्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते तनादयः)

तन्+ लँट्/तिप्
तन् उ+ ति
तन् ओ+ ति
तनोति

तन्+ लँट्/त
तन् उ+ त
तनुते

तन्+ लँट्/वस्
तन् उ+ वस्
(लोपश्चास्यान्यतरस्यां म्वोः)
तन्वः-तनुवः

तन् तन् + अतुस् (लिँट्)
तेन् + अतुस् (अत एकहल्मध्ये...)
तेनतुः

अतन् इ स् + ईत्
अतान् इ + ईत्
अतानीत्,
अतनीत्

अतन् स् + त
अतन् स् + त (अनुदात्तोपदेश..)
अतत, अतनिष्ट

## ❑ तनुँ विस्तारे ॥

१.अत्र कोष्ठकान्तर्गतपाठः चेन्नैसंस्करणस्थः।

❖ उ-विधायकं विधिसूत्रम्—

**सूत्रम्— तनादिकृञ्भ्य उः (६,१.७९)**

**अर्थः—** शपोऽपवादः। तनोति, (तन्वः-तनुवः) तनुते (तनुवहे-तन्वहे, तनुमहे-तन्महे) । ततान, (तेनतुः) तेने। तनितासि, तनितासे। तनोतु। (तनु, तनवानि) तनुताम्। अतनोत्-द्, अतनुत। तनुयात्, तन्वीत। तन्यात्, तनिषीष्ट। अतानीत्, अतनीत्॥

❖ सिचो लुक्-विधायकं विधिसूत्रम्—

**सूत्रम्— तनादिभ्यस्तथासोः (२,४.७९)**

**अर्थः—** तनादेः सिँचो वा लुक् स्यात् त-थासोः। (अनुनासिकलोपः) अतत, अतनिष्ट। अतथाः, अतनिष्ठाः। अतनिष्यत्, अतनिष्यत॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु 'सन्' धातोः प्रक्रिया



सन्+ लँट्/तिप्
सन् उ+ ति
सन् ओ+ ति
**सनोति**

सन्+ लँट्/त
सन् उ+ त
**सनुते**

सन् + यास् त् (आशीर्लिँङ्)
स आ + यास् त्
**सायात्, सन्यात्**

लुङ्
असन् इ स् + ईत्
असान् इ + ईत्
**असानीत्,**
**असनीत्**

असन् स् + त
अस आ स् + त (तनादिभ्यस्तथासोः)
**असात, असनिष्ट**

❑ **षणुँ दाने ॥ २ ॥ सनोति, सनुते ॥**

❖ आत्व-विधायकं विधिसूत्रम्—

**सूत्रम्— ये विभाषा (६,४.४३)**

**अर्थः—** जनसनखनामात्वं वा यादौ क्ङिति। सायात्, सन्यात् ॥

❖ आत्व-विधायकं विधिसूत्रम्—

**सूत्रम्— जन-सन-खनां सञ्झलोः (६,४.४२)**

**अर्थः—** एषामाकारोऽन्तादेशः स्यात् सनि झलादौ क्ङिति। असात, असनिष्ट ॥ (असाथाः —असनिष्ठाः।)

१.अत्र कोष्ठकान्तर्गतपाठः चेन्नैसंस्करणस्थः।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु ‘क्षण्-क्षिण्-तृण्’ धातूनां प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते तनादयः)

अक्षण् इ स् + ईत्
अक्षण् इ + ईत्
अक्षणीत्

लुङ्

(तनादिभ्यस्तथासोः)

✓ अक्षत, अक्षणिष्ट। अक्षथाः, अक्षणिष्ठाः॥
✓ अक्षित, अक्षेणिष्ट॥

क्षिण्+ लँट्/तिप्
क्षिण् उ+ ति
क्षेण् ओ+ ति
क्षेणोति,
क्षिणोति

❑ क्षणुँ हिंसायाम् ॥ क्षणोति, क्षणुते॥ ‘ह्म्यन्ते..’ति न वृद्धिः। अक्षणीत्, अक्षत, अक्षणिष्ट। अक्षथाः, अक्षणिष्ठाः॥

❑ क्षिणुँ च ॥ (मतभेदेन[१]) उप्रत्यये लघूपधस्य गुणो वा— क्षेणोति, क्षिणोति। क्षेणिता। अक्षेणीत्, अक्षित, अक्षेणिष्ट॥

❑ तृणुँ अदने ॥ तृणोति, तर्णोति तृणुते, तर्णुते॥

१.अत्र कोष्ठकान्तर्गतपाठः चेन्नैसंस्करणस्थः।

‘सञ्ज्ञापूर्वको विधिरनित्यः’ इति वादिमते— क्षिणोति। तद्-अनङ्गीकर्तृमते तु— क्षेणोति।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु 'कृ' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते तनादयः)

कृ+ लँट्/तिप्
कृ उ+ ति
कर् ओ+ ति (गुणौ)
करोति

कृ उ+ तस्
कर् उ+ तस्
कुर् उ+ तस्
कुरुतः

कृ उ+ झि
कर् उ+ अन्ति
कुर् व्+ अन्ति
कुर्वन्ति

कुर् उ+ वस्
कुर् + वस्
कुर्वः

| | | |
|---|---|---|
| करोति | कुरुतः | कुर्वन्ति |
| करोषि | कुरुथः | कुरुथ |
| करोमि | कुर्वः | कुर्मः |

| | | |
|---|---|---|
| कुरुते | कुर्वाते | कुर्वते |
| कुरुषे | कुर्वाथे | कुरुध्वे |
| कुर्वे | कुर्वहे | कुर्महे |

❑ डुकृञ् करणे ॥ ६ ॥ करोति ॥

❖ उकारादेश-विधायकं विधिसूत्रम्—

**सूत्रम्—** अत उत्सार्वधातुके (६,४.११०)

**अर्थः—** उप्रत्ययान्तस्य कृञोऽकारस्य उः स्यात् सार्वधातुके क्ङिति। कुरुतः॥

❖ उपधादीर्घनिषेधकं विधिसूत्रम्—

**सूत्रम्—** न भकुर्छुराम् (८,२.७९)

**अर्थः—** भस्य कुर्छुरोरुपधाया न दीर्घः। कुर्वन्ति॥

❖ नित्य-उकारलोप-विधायकं विधिसूत्रम्—

**सूत्रम्—** नित्यं करोतेः (६,४.१०८)

**अर्थः—** करोतेः प्रत्ययोकारस्य नित्यं लोपो म्वोः परयोः। कुर्वः। कुर्मः। कुरुते।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु 'कृ' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते तनादयः)

चकार, चक्रे। कर्तासि, कर्तासे। करिष्यति, करिष्यते। करोतु। कुरुताम्। अकरोत्। अकुरुत॥

❖ उविकरणस्य लोप-विधायकं विधिसूत्रम्—**ये च (६,४.१०९)**

**अर्थः**— कृञ उलोपो यादौ प्रत्यये परे। कुर्यात्, कुर्वीत। क्रियात्, कृषीष्ट। अकार्षीत्, अकृत। अकरिष्यत्, अकरिष्यत॥

कुर् उ+ यास् त् =कुर्यात्

लोँट् (परस्मै.)— करोतु- कुरुतात् कुरुताम् कुर्वन्तु। कुरु[१]-कुरुतात् कुरुतम् कुरुत। करवाणि करवाव करवाम।
लोँट् (आत्मने.)— कुरुताम् कुर्वाताम् कुर्वताम्। कुरुष्व कुर्वाथाम् कुरुध्वम्। करवै करवावहै करवामहै।
लँङ् (परस्मै.)— अकरोत् अकुरुताम् अकुर्वन्। अकरोः अकुरुतम् अकुरुत। अकरवम् अकुर्व अकुर्म।
लँङ् (आत्मने.)— अकुरुत- अकुर्वाताम् अकुर्वत। अकुरुथाः अकुर्वाथाम् अकुरुध्वम्। अकुर्वि अकुर्वहि अकुर्महि।
विधिलिँङ् (परस्मै.)— कुर्यात् कुर्याताम् कुर्युः। कुर्याः कुर्यातम् कुर्यात। कुर्याम कुर्याव कुर्याम।
विधिलिँङ् (आत्मने.)— कुर्वीत कुर्वीयाताम् कुर्वीरन्। कुर्वीथाः कुर्वीयाथाम् कुर्वीध्वम्। कुर्वीय कुर्वीवहि कुर्वीमहि।
आशीर्लिँङ् (परस्मै.)— क्रियात् क्रियास्ताम् क्रियासुः। क्रियाः क्रियास्तम् क्रियास्त। क्रियासम् क्रियास्व क्रियास्म। (रिङ्-श-यग्-लिँङ्क्षु)
आशीर्लिँङ् (आत्मने.)—कृषीष्ट कृषीयास्ताम् कृषीरन्। कृषीष्ठाः कृषीयास्थाम् कृषीध्वम् । कृषीय कृषीवहि कृषीमहि। (उश्च)
लुँङ् (परस्मै.)— अकार्षीत् अकार्ष्टाम् अकार्षुः। अकार्षीः अकार्ष्टम् अकार्ष्ट। अकार्षम् अकार्ष्व अकार्ष्म। (सिँचि वृद्धिः परस्मैपदेषु)
लुँङ् (आत्मने.)— अकृत[२] अकृषाताम् अकृषत। अकृथाः अकृषाथाम् अकृढ्वम्। अकृषि अकृष्वहि अकृष्महि।

१. उतश्च प्रत्ययादसंयोगात्पूर्वात्। २.तनादिभ्यस्तथासोः, उश्च,ह्रस्वादङ्गात्।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु 'कृ' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते तनादयः)

सम्+ करोति
सम्+ सुँट् करोति
सर्+ स् करोति (समः सुँटि)
संर्+ स्करोति     सँर्+ स्करोति
संः+ स्करोति     सँः+ स्करोति
संस्+ स्करोति     सँस्+ स्करोति
(सम्पुङ्कानां सो वक्तव्यः)

1.संस्स्करोति 2.सँस्स्करोति

(समो वा लोपमेके)— मकारलोपः

3.संस्करोति 4.सँस्करोति

परि+ करोति
परि+ सुँट् करोति
परिष्करोति
(परिनिविभ्यः सेव-सित-सय-सिवुँ-सह-सुँट्-स्तु-स्वञ्जाम्)

सम्+ कृतम्
सम्+ सुँट् कृतम्
संर्+ स्कृतम्
संः + स्कृतम्
संस् + स्कृतम्
1.संस्स्कृतम्
3.संस्कृतम्

❖ सुँट्-विधायकं विधिसूत्रम्—

**सूत्रम्— सम्परिभ्यां करोतौ भूषणे** (६,१.१३७)

**सूत्रम्— समवाये च** (६,१.१३८)

**अर्थः—** सम्परिपूर्वस्य करोतेः सुँट् स्याद् भूषणे, संघाते चार्थे। संस्करोति। अलङ्करोतीत्यर्थः। संस्कुर्वन्ति। सङ्घीभवन्तीत्यर्थः। सम्पूर्वस्य क्वचिदभूषणेऽपि सुँट्। 'संस्कृतं भक्षा' इति ज्ञापकात्॥

भक्षाः= भूर्जनम्

सँस् + स्कृतम्
2.सँस्स्कृतम्
4.सँस्कृतम्

# उभयपदिधातुषु 'कृ' धातोः प्रक्रिया



उप+ करोति
उप+ सुँट् कुरुते
उपस्कुरुते

**सूत्रम्**— उपात् प्रतियत्न-वैकृत-वाक्याध्याहारेषु च॥ (६,१.१३९)

**अर्थः**— उपात्कृञः सुँट् स्यादेष्वर्थेषु, चात्प्रागुक्तयोरर्थयोः।

- प्रतियत्नो गुणाधानम्। एधोदकस्योपस्कुरुते।
- विकृतमेव वैकृतं विकारः। उपस्कृतं भुङ्क्ते।
- वाक्याध्याहार आकाङ्क्षितैकदेशपूरणम्। उपस्कृतं ब्रूते॥
- (भूषणे)—उपस्कृता कन्या।
- (समवाये)— उपस्कृता ब्राह्मणाः।

# आत्मनेपदिधातुषु ‘वन्-मन्’ धातोः प्रक्रिया



❑ **वनुँ याचने॥ ७॥** वनुते। ववने॥ (चान्द्रमते ‘वनोति’ इत्यपि) {अयं चेन्नैसंस्करणे अधिकः पाठः।}

❑ **मनुँ अवबोधने॥ ८॥** मनुते। मेने। मनिष्यते। मनुताम्। अमनुत। मन्वीत। मनिषीष्ट। अमत, अमनिष्ट। अमनिष्यत॥

लँट् — वनुते वन्वाते वन्वते। वनुषे वन्वाथे वनुध्वे। वन्वे वनुवहे-वन्वहे वनुमहे-वन्महे।

लिँट्— ववने ववनाते ववनिरे। ववनिषे ववनाथे ववनिध्वे। ववने ववनिवहे ववनिमहे।

लुँट् — वनिता वनितारौ वनितारः। वनितासे वनितासाथे वनिताध्वे। वनिताहे वनितास्वहे वनितास्महे।

लृँट्— वनिष्यते वनिष्येते वनिष्यन्ते। वनिष्यसे वनिष्येथे वनिष्यध्वे। वनिष्ये वनिष्यावहे वनिष्यामहे।

लोँट् — वनुताम् वन्वाताम् वन्वताम्। वनुष्व वन्वाथाम् वनुध्वम्। वनवै वनवावहै वनवामहै।

लँङ् — अवनुत अवन्वाताम् अवन्वत। अवनुथाः अवन्वाथाम् अवनुध्वम्। अवन्वि अवनुवहि-अवन्वहि अवनुमहि-अवन्महि।

विधिलिँङ् — वन्वीत वन्वीयाताम् वन्वीरन्। वन्वीथाः वन्वीयाथाम् वन्वीध्वम्। वन्वीय वन्वीवहि वन्वीमहि।

आशीर्लिँङ्— वनिषीष्ट वनिषीयास्ताम् वनिषीरन्। वनिषीष्ठाः वनिषीयास्थाम् वनिषीध्वम्। वनिषीय वनिषीवहि वनिषीमहि।

लुँङ् — अवत-अवनिष्ट अवनिषाताम् अवनिषत। अवथाः-अवनिष्ठाः अवनिषाथाम् अवनिढ्वम्। अवनिषि अवनिष्वहि अवनिष्महि।

लृँङ् — अवनिष्यत अवनिष्येताम् अवनिष्यन्त। अवनिष्यथाः अवनिष्येथाम् अवनिष्यध्वम्। अवनिष्ये अवनिष्यावहि अवनिष्यामहि।

# तनादिगणस्य परीक्षणम्

**०१.लघुसिद्धान्तकौमुद्यां तनादिगणे कति धातवः पठिताः—**

क. पञ्च

**ख.अष्टौ**

ग. सप्त

घ. षड्

**०२. 'तनादिकृञ्भ्य उः' इति सूत्रं कस्यापवादः?**

**क.शपः**

ख. गुणस्य

ग. वृद्धेः

घ. यकारस्य

**०३. 'तेने' इति रूपं कुत्र भवति?**

क. लोँट्युत्तमे

ख. आशीर्लिँङि

**ग. लिँटि**

घ. लुँटि

**०४. एतेषु कुत्र 'तनादिभ्यस्तथासोः' इति सूत्रस्य प्रवृत्तिः?**

**क.अतथाः**

ख. अतनिष्ठाः

ग. अतनिष्यत्

घ. अतात

**०५. 'सनोति' इति पदस्य कोऽर्थः?**

क. मेलनं करोति

**ख.ददाति**

ग. वाति

घ. शृणोति

**०६. 'सायात्, सन्यात्' इत्यत्र आत्वविकल्पः केन सूत्रेण—**

क. तनादिभ्यस्तथासोः

ख. जनसनखनां सञ्झलोः

ग. ये च

**घ. ये विभाषा**

**०७. 'असाथाः' इति रूपं कस्य धातोः?**

**क.सन्**

ख. तृण्

ग. क्षिण्

घ. सथ्

**०८. एतेषु इदं रूपं शुद्धं नास्ति—**

क. क्षेणोति

ख. क्षिणोति

ग. अक्षित

**घ. चक्षाणे**

**०९. 'तर्णुते' इत्यत्र गुणादेशः केन सूत्रेण—**

क. आद्गुणः

ख. सिपि धातो रुँर्वा

ग. पूगन्तलघूपधस्य च

घ. सार्वधातुकार्धधातुकयोः

**१०. अदनार्थे कः धातुः—**

क. षणुँ

ख. मनुँ

ग. तृणुँ

घ. क्षणुँ

**११. 'कुरुतः' इत्यत्र अकारस्य स्थाने उकारः केन सूत्रेण—**

क. तनादिकृभ्य उः

ख. अत उत्सार्वधातुके

ग. उदितो वा

घ. अचिश्नुधातु......

**१२. 'कुर्वन्ति' इत्यत्र यणादेशः केन—**

**क. इको यणचि**

ख. एरनेकाचोऽसंयोगपूर्वस्य

ग. हुश्नुवोः सार्वधातुके

घ. इणो यण्

**१३. 'कुर्+ व्+अन्ति' इत्यत्र 'हलि चे'ति प्राप्तदीर्घस्य निषेधः केन सूत्रेण—**

क. नित्यं करोतेः

ख. ह्रस्वस्य गुणः

**ग. न भकुर्छुराम्**

घ. क्क्ङिति च

**१४. अशुद्धं रूपं चिनुत—**

**क. कुरुवः**

ख. कुर्वः

ग. अकुरुत

घ. अकुर्वन्

**१५. 'कुर्वे' इत्यस्य कर्तृपदं किम्?**

क. वयम्

**ख.अहम्**

ग. त्वम्

घ. यूयम्

**१६. क्रियात्-कुर्वीत-कुर्युः-अकुर्वि-अकार्षीः— एतानि रूपाणि क्रमशः सन्ति—**

क. विधिलिँङ्- आशीर्लिँङ्- विधिलिँङ्-लँङ्-लुँङ्

ख. आशीर्लिँङ्-विधिलिँङ्- लृँङ्-लँङ्-लुँङ्

ग. आशीर्लिँङ्-विधिलिँङ्-लँङ्- विधिलिँङ् -लुँङ्

**घ. आशीर्लिँङ्-विधिलिँङ्- विधिलिँङ्-लँङ्-लुँङ्**

**१७. 'अकृत' इत्यत्र सिचो लोपः केन—**

क. तनादिभ्यस्तथासोः

ख. इट ईटि

ग. ये च

घ. नित्यं करोतेः

**१८. 'संस्करोति' इत्यस्यार्थोऽस्ति—**

क. अलङ्करोति

ख. परिवेषयति

ग. भक्षयति

घ. द्रवति

**१९. सम्पूर्वस्य अभूषणार्थेऽपि सुँट् इत्यत्र किं ज्ञापकम्—**

क. सम्परिभ्यां करोतौ भूषणे

ख. समवाये च

**ग. संस्कृतं भक्षाः**

घ. समः सुँटि

**२०. 'समवाये च' समवायशब्दस्य कोऽर्थः—**

क. सम्बन्धविशेषः

ख. सत्कारः

**ग. समूहः**

घ. अवयवः

**२१. प्रतियत्नः कः—**

क. सङ्घः

ख. गुणाधानम्

ग. भक्षणम्

घ. विशेषयत्नः

**२२. भूषणार्थस्य किमुदाहरणम्—**

क. उपस्कृता ब्राह्मणाः

ख. उपस्कृतं भुङ्क्ते

**ग. उपस्कृता कन्या**

घ. एधोदकस्योपस्कुरुते

**२३. सम्+करोति इति स्थितौ कति रूपाणि भवन्ति ?**

**क. ४**

ख. ३

ग. २

घ. १

**२४. वाक्याध्याहारस्य किमुदाहरणम्—**

क. उपस्कृता ब्राह्मणाः

ख. उपस्कृतं भुङ्क्ते

**ग. उपस्कृतं ब्रूते**

घ. एधोदकस्योपस्कुरुते

**२५. एतेषु कः धातुः चान्द्रमते परस्मैपदेऽपि भवति—**

क. वन्

ख. मन्

ग. तन्

घ. कृ

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# क्र्यादिगणे धातवः

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते क्र्यादयः)

## अथोभयपदिनः

1. डुक्रीञ् द्रव्यविनिमये
2. प्रीञ् तर्पणे कान्तौ च
3. श्रीञ् पाके
4. मीञ् हिंसायाम्
5. षिञ् बन्धने
6. स्कुञ् आप्लवने
7. युञ् बन्धने
8. क्नूञ् शब्दे
9. द्रूञ् हिंसायाम्
10. दॄ(ञ्) विदारणे
11. पूञ् पवने
12. लूञ् छेदने
13. स्तॄञ् आच्छादने
14. कॄञ् हिंसायाम्
15. वॄञ् वरणे
16. धूञ् कम्पने
17. ग्रहँ उपादाने

## अथ परस्मैपदिनः

1. कुषँ निष्कर्षे
2. अशँ भोजने
3. मुषँ स्तेये
4. ज्ञा अवबोधने

## अथात्मनेपदिनः

1. वृङ् सम्भक्तौ

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु ‘क्री’ धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते क्र्यादयः)

| | | |
|---|---|---|
| क्री+ लँट्/तिप्<br>क्री श्ना+ ति<br>क्री ना+ ति<br>क्रीणाति | क्री श्ना + तस्<br>क्री नी + तस्<br>क्री णी + तस्<br>क्रीणीतः | क्री श्ना + झि<br>क्री ना + अन्ति<br>क्री न् + अन्ति<br>क्रीणन्ति |

हलादि-ङित्-सार्वधातुके परे— ईत्वम्

अजादि-ङित्-सार्वधातुके परे— आकारलोपः

❑ डुक्रीञ् द्रव्यविनिमये॥ १॥

❑ श्ना-विकरणप्रत्यय-विधायकं विधिसूत्रम्—

सूत्रम्— क्र्यादिभ्यः श्ना॥ (३,१.८१)

अर्थः— शपोऽपवादः। क्रीणाति। ‘ई हल्यघोः’— क्रीणीतः। ‘झोऽन्तः’[1] ‘श्नाभ्यस्तयोरातः’— क्रीणन्ति। क्रीणासि। क्रीणीथः। क्रीणीथ। क्रीणामि। क्रीणीवः। क्रीणीमः। क्रीणीते। क्रीणाते। क्रीणते। क्रीणीषे। क्रीणाथे। क्रीणीध्वे। क्रीणे। क्रीणीवहे। क्रीणीमहे। चिक्राय। चिक्रियतुः। चिक्रियुः। चिक्रयिथ, चिक्रेथ। ~~(चिक्रिय)।~~ चिक्रिये। क्रेता। क्रेष्यति, क्रेष्यते। क्रीणातु, क्रीणीतात्। क्रीणीताम्। अक्रीणात्, अक्रीणीत। क्रीणीयात्, क्रीणीत। क्रीयात्, क्रेषीष्ट। अक्रैषीत्, अक्रेष्यत॥

१.अयं पाठः चेन्नैसंस्करणस्थः।

# उभयपदिधातुषु 'प्री-श्री-मी-षि' धातोः प्रक्रिया



हलादि-ङित्-सार्वधातुके परे— ईत्वम्

अजादि-ङित्-सार्वधातुके परे— आकारलोपः

प्र+मी+ तिप्
प्र+मी+ ना+ ति
प्र+मी+ णा+ ति
प्रमीणाति

मी+ णल्
मा+ औ
मा मा+ औ
ममौ

अमी+ त्
अमा स्+ त्
अमास् इस्+ ईत्
अमास् इ+ ईत्
अमासीत्

यमरमनमातां सक् च

एज्निमित्तकप्रत्ययस्य सम्भावनायाम्— मा

कित् ङित् प्रत्ययपरेषु— मी

- प्रीञ् तर्पणे कान्तौ च॥ २॥ प्रीणाति, प्रीणीते॥
- श्रीञ् पाके॥ ३॥ श्रीणाति, श्रीणीते॥
- मीञ् हिंसायाम्॥ ४॥
- नस्य णत्व-विधायकं विधिसूत्रम्—

सूत्रम्— हिनुमीना (८,४.१५)

अर्थः— उपसर्गस्थान्निमित्तात्परस्यैतयोर्नस्य णः स्यात्। प्रमीणाति, प्रमीणीते। 'मीनाती'त्यात्वम्। ममौ। मिम्यतुः। ममिथ, ममाथ। मिम्ये। माता। मास्यति। मीयात्, मासीष्ट। अमासीत्। अमासिष्टाम्। अमास्त॥

- षिञ् बन्धने॥ ५॥ सिनाति, सिनीते। सिषाय, सिष्ये। सेता॥

❑ स्कुञ् आप्लवने/आप्रवणे ॥ ६ ॥

❑ श्नु-श्ना-विधायकं विधिसूत्रम्—

सूत्रम्— स्तन्भुँस्तुन्भुँस्कन्भुँस्कुन्भुँस्कुञ्भ्यः श्नुश्च (३,१.८२)

अर्थः— चात्= सूत्रपठितचकारात् श्ना। स्कुनोति, स्कुनाति। स्कुनुते, स्कुनीते। चुस्काव, चुस्कुवे। स्कोता। अस्कौषीत्, अस्कोष्ट॥

❑स्तन्भ्वादयश्चत्वारः सौत्राः= सूत्रपठिताः धातवः। सर्वे रोधनार्थाः परस्मैपदिनः॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिनां ‘स्तन्भ्-स्तुन्भ्-स्कन्भ्-स्कुन्भ्’ सौत्रधातूनां प्रक्रिया



लोँट्

स्तभ् ना+ सि
स्तभ् ना+ हि
स्तभ् आन+ हि
स्तभान

वि+अस्तभत्
व्यष्टभत्

❖ शानच्-आदेशविधायकं विधिसूत्रम्—

**सूत्रम्—** **हलः श्नः शानज्झौ (३,१.८३)**

**अर्थः—** हलः परस्य श्नः शानजादेशः स्याद्धौ परे। स्तभान॥

❖ वैकल्पिक-अङादेश-विधायकं विधिसूत्रम्—

**सूत्रम्—** **जॄ-स्तन्भुँ-म्रुचुँ-म्लुँचुँ-ग्रुचुँ-ग्लुचुँ-ग्लुञ्चुँ-श्विभ्यश्च (३,१.५८)**

**अर्थः—** च्लेरङ् वा स्यात्॥

❖ षत्व-विधायकं विधिसूत्रम्—

**सूत्रम्—** **स्तन्भेः (८,३.६७)**

**अर्थः—** स्तन्भेः सौत्रस्य सस्य षः स्यात्। व्यष्टभत्। अस्तम्भीत्॥

# उभयपदिधातुषु 'यू-क्नू-द्रू-पू-लू' धातोः प्रक्रिया



- युञ् बन्धने॥ ७॥ युनाति, युनीते। योता॥
- क्नूञ् शब्दे॥ ८॥ क्नूनाति, क्नूनीते॥ क्नविता[1]।
- ~~द्रूञ् हिंसायाम्॥ ९॥ द्रूणाति, द्रूणीते॥~~
- द्रूञ् हिंसायाम्॥ ९॥ द्रूणाति, द्रूणीते॥
- ~~दॄ विदारणे॥ १०॥ दृणाति, दृणीते॥~~
- पूञ् पवने॥ १०॥

१.कनकलालठक्कुरस्य 'बालबोधिन्याम्' चेन्नै संस्करणे चायम् अधिकः पाठः।

पू श्ना+ ति
पु ना+ ति
पुनाति

❖ ह्रस्व-विधायकं विधिसूत्रम्—

➢ सूत्रम्— प्वादीनां ह्रस्वः (७,३.८०)

अर्थः—पूञ्-लूञ्-स्तॄञ्-कॄञ्-वॄञ्-धूञ्-शॄ-पॄ-वॄ-भॄ-मॄ-दॄ-जॄ- झॄ-धॄ-नॄ-कॄ-ऋॄ-गॄ-ज्या-री-ली-व्ली-प्लीनां चतुर्विंशतेः शिति ह्रस्वः। पुनाति, पुनीते। पविता॥

- ~~दॄ विदारणे॥ १२॥ दृणाति, दृणीते॥~~
- लूञ् छेदने॥ ११॥ लुनाति, लुनीते॥

○ (गीताप्रेसपुस्तिकायाम् अयं धातुः तर्हि अस्य धातोः पाठः अत्र नोचितः। लघुसिद्धान्तकौमुद्यां क्र्यादिगणे अस्य धातोः पाठः 'प्वादीनां ह्रस्वः' इति सूत्रपाठानुसारं 'धूञ्'धातोः परः एवोचितः।)

# उभयपदिधातुषु 'स्तॄ' धातोः प्रक्रिया



- स्तॄञ् आच्छादने॥ १२॥ स्तृणाति। 'शर्पूर्वाः खयः'— तस्तार। तस्तरतुः। तस्तरे। स्तरीता-स्तरिता। स्तृणीयात्, स्तृणीत। स्तीर्यात्॥

❖ वैकल्पिक-इड्-विधायकं विधिसूत्रम्—

➢ **सूत्रम्— लिँङ्-सिँचोरात्मनेपदेषु॥ (७,२.४२)**

➢ **अर्थः—** वृङ्-वृञ्भ्याम् ॠदन्ताच्च परयोर्लिँङ्-सिँचोरिड् वा स्यात्तङि।

❖ दीर्घनिषेधकं विधिसूत्रम्—

➢ **सूत्रम्— न लिँङि (७,२.३९)**

➢ **अर्थः—** वॄत इटो लिँङि न दीर्घः। स्तरिषीष्ट। उश्चेति कित्त्वम्— स्तीर्षीष्ट। सिँचि च परस्मैपदेषु— अस्तारीत्। अस्तारिष्टाम्। अस्तारिषुः। अस्तरीष्ट, अस्तरिष्ट, अस्तीर्ष्ट॥

स्तॄ + सीय् स् त
स्तर् + इ षी ष् ट

स्तॄ श्ना+ ति
स्तॄ ना+ ति
स्तृणाति

स्तॄ स्तॄ + अ
स्तॄ स्तॄ + अ
स्तर् स्तॄ + अ
त स्तॄ + अ
त स्तर् + अ
त स्तार् + अ
तस्तार

स्तॄ यास्+ त्
स्तिर् या+ त्
स्तीर् या+ त्
ॠत इद्धातोः
हलि च
स्तीर्यात्

# प्वाद्युभयपदिधातुषु 'कृ-वृ- धू-दॄ' धातूनां प्रक्रिया



- कॄञ् हिंसायाम्॥ १३॥ कृणाति, कृणीते। चकार, चकरे॥
- वॄञ् वरणे॥ १४॥ वृणाति, वृणीते। ववार, ववरे। वरिता, वरीता। 'उदोष्ठ्ये'त्युत्त्वम्— वूर्यात्। वरिषीष्ट, वूर्षीष्ट। अवारीत्। अवारिष्टाम्। अवरीष्ट, अवरिष्ट, अवूर्ष्ट॥
- धूञ् कम्पने॥ १५॥ धुनाति, धुनीते। धविता, धोता। अधावीत्। अधविष्ट, अधोष्ट॥
- दॄ विदारणे॥ १२॥ दृणाति, दृणीते॥ (गीताप्रेसपुस्तिकायाम् अयं धातुः तर्हि अस्य धातोः पाठः अत्रोचितः।)

कृणाति, कृणीते। वृणाति, वृणीते। धुनाति, धुनीते। दृणाति, दृणीते— प्वादीनां ह्रस्वः

वरिषीष्ट, वूर्षीष्ट। अवरीष्ट, अवरिष्ट, अवूर्ष्ट— लिँङ्-सिँचोरात्मनेपदेषु, वृतो वा

वूर्यात्। वूर्षीष्ट। अवूर्ष्ट— उदोष्ठ्यपूर्वस्य

वरिता, वरीता— वृतो वा

धविता, धोता— स्वरतिसूतिसूयति-धूञ्-उदितो वा

अधावीत्— स्तु-सु-धूभ्यः परस्मैपदेषु

वॄ + यास् त्
वुर् + यास् त्
वूर् + यास् त्
वूर्यात्

# उभयपदिधातुषु 'ग्रह्' धातोः प्रक्रिया



❑ ग्रहँ उपादाने॥ १७॥ गृह्णाति, गृह्णीते। जग्राह, जगृहे॥

❖ इटः-दीर्घविधायकं विधिसूत्रम्—

➢ सूत्रम्— ग्रहोऽलिँटि दीर्घः (७,२.३७)

➢ अर्थः— एकाचो ग्रहेर्विहितस्येटो दीर्घः, न तु लिँटि। (जग्रहिथ। जग्रहिषे।[1]) ग्रहीता। गृह्णातु। 'हलः श्नः शानज्झावि'ति श्नः शानजादेशः— गृहाण। (गृह्णीयात्। गृह्णीत।[1]) गृह्यात्, ग्रहीषीष्ट। 'ह्म्यन्ते'ति न वृद्धिः— अग्रहीत्। अग्रहीष्टाम्। अग्रहीष्ट। अग्रहीषाताम्॥ (अग्रहीषत।[1])

१.अयं पाठो चेन्नैसंस्करणस्थः।

ग्रह् श्ना+ ति
गृह् ना+ ति
गृह्णाति

ग्रह् ग्रह् + अ
ज ग्राह् + अ
जग्राह

ग्रह् इ तास्+ आ
ग्रह् ई त्+ आ
ग्रहीता

ग्रह् श्ना+ सि
गृह् आन+ हि
गृहाण

अग्रह् इ स्+ ईत्
अग्रहीत्

१.वदव्रज...
२.नेटि
३.अतो हलादेर्लघोः
४.ह्म्यन्तक्षण....

- कुषँ निष्कर्षे= अन्तर्गतस्य बहिर्निस्सारणम्॥ १८॥ कुष्णाति। कोषिता॥
- सूत्रम्— निरः कुषः (७,२.४६)
- अर्थः— अस्माद्वलादेरार्धधातुकस्येड् वा। निष्कोषिता-निष्कोष्टा। निरकोषीत्-निरकुक्षत्।
- अयं पाठो चेन्नैसंस्करणस्थः।
- अशँ भोजने॥ १९॥ अश्नाति। आश। अशिता। अशिष्यति। अश्नातु। अशान॥
- मुषँ स्तेये॥ २०॥ मोषिता। मुषाण॥
- ज्ञा अवबोधने॥ २१॥ जानाति। जज्ञौ॥

# परस्मैपदिधातुषु ‘अश्’ धातोः रूपाणि



लँट् — अश्नाति अश्नीतः अश्नन्ति। अश्नासि अश्नीथः अश्नीथ। अश्नामि अश्नीवः अश्नीमः।

लिँट्— आश आशतुः आशुः। आशिथ आशथुः आश। आश आशिव आशिम।

लुँट् — अशिता अशितारौ अशितारः। अशितासि अशितास्थः अशितास्थ। अशितास्मि अशितास्वः अशितास्मः।

लृँट्— अशिष्यति अशिष्यतः अशिष्यन्ति। अशिष्यसि अशिष्यथः अशिष्यथ। अशिष्यामि अशिष्यावः अशिष्यामः।

लोँट् — अश्नातु-अश्नीतात् अश्नीताम् अश्नन्तु। अशान-अश्नीतात् अश्नीतम् अश्नीत। अश्नानि अश्नाव अश्नाम।

लँङ् — आश्नात् आश्नीताम् आश्नन्। आश्नः आश्नीतम् आश्नीत। आश्नाम् आश्नीव आश्नीम।

विधिलिँङ् — अश्नीयात् अश्नीयाताम् अश्नीयुः। अश्नीयाः अश्नीयातम् अश्नीयात्। अश्नीयाम् अश्नीयाव अश्नीयाम।

आशीर्लिँङ्— अश्यात् अश्यास्ताम् अश्यासुः। अश्याः अश्यास्तम् अश्यास्त । अश्यासम् अश्यास्व अश्यास्म।

लुँङ् — आशीत् आशिष्टाम् आशिषुः । आशीः आशिष्टम् आशिष्ट। आशिषम् आशिष्व आशिष्म।

लृँङ् — आशिष्यत् आशिष्यताम् आशिष्यन्। आशिष्यः आशिष्यतम् आशिष्यत। आशिष्यम् आशिष्याव आशिष्यम।

# आत्मनेपदिधातुषु 'वृ' धातोः प्रक्रिया



- वृङ् संभक्तौ ॥ २२ ॥ वृणीते । ववृषे ॥ ववृढ्वे । वरिता, वरीता । अवरीष्ट, अवरिष्ट, अवृत ॥

॥ इति क्र्यादयः ॥ ९ ॥

# क्र्यादिगणस्य परीक्षणम्

**१. ‘डुक्रीञ्’धातोः किं शिष्यते—**

क. कृ

**ख.क्री**

ग. क्रीञ्

घ. उक्री

**२. ‘ई हल्यघोः’ इतिसूत्रेण कस्य रूपस्य सिद्धिः—**

क. क्रीणति

ख. क्रीणन्ति

**ग. क्रीणीथ**

घ. चिक्राय

**३. ‘क्रीणते’ इत्यत्रेदं कार्यं न भवति—**

क. आत्मनेपदेष्वनतः— अत्

ख. टित आत्मनेपदानां टेरे— एत्वम्

ग. श्नाभ्यस्तयोरातः— आकारलोपः

**घ. ई हल्यघोः— ईत्वम्**

**४. ‘डुक्रीञ्’धातोः लोँट्युत्तमे आत्मनेपदे कानि रूपाणि—**

**क. क्रीणै क्रीणावहै क्रीणामहै**

ख. क्रीणै क्रीणीवहै क्रीणीमहै

ग. क्रीणे क्रीणावहे क्रीणामहे

घ. क्रीणानि क्रीणाव क्रीणाम

**५. ‘डुक्रीञ्’धातोः लँङि कतिषु स्थानेषु ‘ई हल्यघोः’ इतिसूत्रेण ईत्वं भवति ?**

क. ०५

**ख.१०**

ग. ०८

घ. ०४

**६. ‘डुक्रीञ्’ धातोः ‘अक्रेषत’ इतिरूपं कुत्र भवति ?**

क. न कुत्रापि

ख. लँङि

**ग. लुँङि**

घ. लृँङि

**७. ‘प्रीणीते’ इति रूपं कस्य धातोः ?**

**क. प्रीञ्**

ख. प्रीणीञ्

ग. प्रीण्

घ. प्राण्

**८. 'प्रमीणाति' इत्यत्र णत्वं केन सूत्रेण—**

क. अट्कुप्वाङ्नुम्व्यवायेऽपि

ख. णो नः

**ग. हिनुमीना**

घ. सदेरप्रतेः

**९. 'मीनातिमिनोतिदीङां ल्यपि च' इत्यनेन आत्वं कुत्र—**

**क. ममौ**

ख. मीनाति

ग. अमीनाताम्

घ. अमीनाः

**१०. एतेषु कस्य धातोः श्ना-श्नुश्च भवतः—**

**क. स्कुञ्**

ख. षिञ्

ग. श्रीञ्

घ. क्नूञ्

**११. स्तन्भुँस्तुन्भुँ..........सूत्रं पूरयत—**

क. स्कन्स्कुन्भुँस्कुञ्भ्यः श्नुश्च।

ख. स्कन्भुँस्कुन्भुँस्कञ्भ्यः श्नुश्च।

ग. स्कन्भुँस्कुन्भुँस्कुञ्भ्यः श्नाश्च।

**घ. स्कन्भुँस्कुन्भुँस्कुञ्भ्यः श्नुश्च।**

**१२. 'स्तभान' इतिरूपं कुत्र भवति—**

क. स्तम्भधातोः लिँटि

ख. स्तम्भधातोः लुँटि

**ग. स्तम्भधातोः लोँटि**

घ. स्तम्भधातोः आशीर्लिँङि

**१३. 'स्कम्भ्' धातु विषये इदं कथनं सत्यं नास्ति—**

क. अयं धातुः परस्मैपदी।

ख. अयं धातुः रोधनार्थकः।

ग. अयमपि धातूभयपदी।

घ. अयं श्ना-श्नुप्रत्ययं लभते।

**१४. अस्य सूत्रस्य शुद्धस्वरूपं किम् ?**

क. जॄ-स्तन्भुँ-म्रुचुँ-म्लुँचुँ-ग्रुचुँ-ग्लुचुँ-ग्लुञ्चुँ-श्विभ्यश्च ।

ख. जॄ-स्तन्भुँ-म्रुचुँ-म्लुँचुँ-ग्रुचुँ -ग्लुञ्चुँ-श्विभ्यश्च ।

**ग. जॄ-स्तन्भुँ-म्रुचुँ-म्लुँचुँ-ग्रुचुँ-ग्लुचुँ-ग्लुञ्चुँ-श्विभ्यश्च।**

घ. जॄ-स्तन्भुँ-म्रुचुँ-म्लुँचुँ-ग्रुचुँ-ग्लुचुँ-ग्लुञ्चुँ-श्वुभ्यश्च

**१५. हौ परे श्नः शानचादेशः केन सूत्रेण—**

क. जॄ-स्तन्भुँ-म्रुचुँ-म्लुँचुँ-ग्रुचुँ-ग्लुचुँ-ग्लुञ्चुँ-श्विभ्यश्च

**ख.हलः श्नः शानज्झौ**

ग. स्तन्भेः

घ. स्तन्भुँस्तुन्भुँस्कन्भुँस्कुन्भुँस्कुञ्भ्यः श्नुश्च

**१६. एतेषु को धातुः क्र्यादिगणे नास्ति—**

क. द्रूञ् हिंसायाम्

**ख.दृञ् हिंसायाम्**

ग. स्कुञ् आप्लवने

घ. युञ् बन्धने

**१७. प्वादिष्वयं धातुर्नास्ति—**

क. लूञ्

ख. पॄ

ग. झॄ

**घ. घॄ**

**१८. 'तस्तार' इत्यत्र शरो लोपः केन—**

क. हलादिशेषः

ख. लोपो यि

**ग. शर्पूर्वाः खयः**

घ. अत्र लोपो चाभ्यासस्य

**१९. 'लिङ्सिचोरात्मनेपदेषु' इति सूत्रेण विधीयते—**

क. लोपः

**ख.वैकल्पिक-इडागमः**

ग. दीर्घः

घ. ह्रस्वः

**२०. 'पुनाति' इत्यत्र ह्रस्वं केन सूत्रेण ?**

**क.प्वादीनां ह्रस्वः**

ख. न लिँङि

ग. ह्रस्वः

घ. निपातनात्

**२१. एतेष्वयं धातुः हिंसार्थको नास्ति—**

क. मीञ्

ख. द्रूञ्

ग. कॄञ्

**घ. वृञ्**

**२२. वृञ्-धातोः आशीर्लिङि इदं रूपं न भवति—**

क. वूर्यात्

**ख.व्रियात्**

ग. वरिषीष्ट

घ. वूर्षीष्ट

**२३. 'धूञ्-कम्पने' इति धातोः लुँङि एकवचने कति रूपाणि—**

क. एकम्

ख. द्वे

ग. त्रीणि

**घ. चत्वारि**

**२४. उपादानम् इत्यस्यार्थोऽस्ति—**

क. क्रयणम्

**ख.ग्रहणम्**

ग. चयनम्

घ. उच्चारणम्

**२५. जानते इति रूपं कस्य धातोः—**

क. ग्रह्

**ख.ज्ञा**

ग. जन्

घ. न कस्यापि।